॥ याजुषी मृत्युलाङ्गूलविद्योपनिषत् ॥

ॐ सहनाववतु ॥ सहनौभुनक्तु ॥

सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शांतिः । शांतिः ॥ शांतिः ॥।

ॐ एकदा महाकैलासे सुखासीनं महादेवमुपगम्य प्रणिपत्य
भो भगवन् मृत्युलाङ्गूलविद्यामनुब्रूहीत्युवाच वसिष्ठः ।
अथाह भगवान्महादेवो मृत्युलाङ्गुलविद्यां वक्ष्यामीति ।
मृत्योस्समयावबोधनात् मृत्युलाङ्गुलमित्युच्यते ।

अस्याः श्रीमृत्युलाङ्गूलविद्यायाः उलूकनाङ्गनो भगवानृषिः ।
अनुष्टुप्छन्दः । मृत्युलाङ्गूलो देवता । क्लामित्यादिन्यासाः ।

॥ ध्यानम् ॥

नीलपर्वतसङ्काश रुद्रकोपसमुद्भव ।
कालदण्डधर श्रीमन्वैवस्वत नमोऽस्तु ते ॥

अथातो योगविन्यासो मधुवादिनी अहङ्कारो नाहङ्कारस्य ॥

ऋतँ सत्यं परं ब्रह्म पुरुषं कृष्ण पिङ्गलम् ।
ऊध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥

लमित्यादिपञ्चपूजा ।

इयं विद्या सायम्प्रातः सन्ध्ययोरुपस्थानात्पूर्वं
विस्तृताङ्गुष्ठतर्जनीमुद्रया सव्यं पाणिं भूमौ विन्यस्य
दक्षिणाभिमुखं शिष्टैर्जप्यते । स्वान्त्यकाल ज्ञानमपि
सुकरमस्या जपानुष्ठानेन इत्यप्याहुश्च मान्त्रिकाः ॥

॥ मूलमन्त्रः ॥

ॐ नमो भगवते उमापतये वरवृषभ फेनकपोलाय

पशुपतये नमो नमः ॥

इति स्मृते मृत्युलाङ्गूले ब्रह्महाऽब्रह्महा भवति ।
स्वर्णस्तेयी अस्तेयी भवति । सुरापायी अपायी भवति ।
गुरुतल्पगामी अगामी भवति । अब्रह्मचारी सुब्रह्मचारी भवति ।
एकवारेण जपित्वा अष्टोत्तर शतसहस्रलक्ष गायत्री जप फलानि भवन्ति ।
अष्टौ ब्राह्मणान् सम्यक्ग्राहयित्वा- ब्रह्म लोकमवाप्नोति ।
यदि कश्चिन्न ब्रूयात् - कुष्ठी कुनखी भवति ।
दीयमानो न गृह्णीयात् अन्धो भवति । षड्भिर्मासैः प्रमुच्यते ।
स्त्रीणां योनौ - अहरहः प्रयुञ्जानः सर्वात्पापात्पूतो भवति ।
मृत्युः प्रीयताम् । मृत्युर्नीलकण्ठः । अपरिमितमायुर्भवति ।
शतवर्षाणि जीवन्ति । नश्यति मन्त्रो नश्यति तन्त्रो नश्यति यन्त्रः ।
न च पुनरावृत्या । यदि पुनरावृत्या ऋषीणां कुले महामेधावी भवति ।
इत्याह भगवान्महादेवो वसिष्ठायेत्युपनिषत् ॥

ॐ सहनाववतु ॥ सहनौभुनक्तु ॥

सह वीर्यं करवावहै ॥

तेजस्विनावधीतमस्तु मा विद्विषावहै ॥

ॐ शांतिः । शांतिः ॥ शांतिः ॥।